॥ श्री अरविन्दोपनिषत् ॥

ॐ । एकमेवाद्वितीयं ब्रह्म सदसद्रूपं सदसदतीतं नान्यत् किञ्चिदस्ति त्रिकालधृतं त्रिकालातीतं वा सर्वन्तु खलु ब्रह्मैकं यत् किञ्च जगत्यामणु वा महद्वोदारं वानुदारं वा ब्रह्मैव तद् ब्रह्मैव जगदपि ब्रह्म सत्यं न मिथ्या ।

स एव परात्परः पुरुषस्त्रिकालातीतः सकलभुवनातीतः सकलभुवनप्रविष्टः सदतीतोऽसदतीतः सन्मयः चिन्मय आनन्दमयोऽनाद्यन्तः सनातनो भगवान् ।

स निर्गुणो गुणान् धत्ते सगुणोऽनन्तगुणो निर्गुणत्वं भुङ्क्ते स्वयञ्चातिवर्तते निर्गुणत्वञ्च सगुणत्वञ्च न निर्गुणो न गुणी केवल एव यः ।

स भुवनातीतो भुवनानि धारयति भुवनभूतो भुवनानि प्रविशति कालातीतः कालो भवत्यनन्तः सान्तः प्रकाशत एको बहवोऽरूपो रूपी विद्याविद्यामय्या चिच्छक्त्या ।

स्वयन्तु न धर्ता न धार्यो नानन्तः न सान्तो नैको न बहुः नारूपो न रूपी केवल एव यः ।

सर्वाणि त्वेतानि नामानि यदेकत्वञ्च बहुत्वञ्चानन्तञ्च सान्तञ्च प्रकाशन्त एव चिदात्मनि चिन्मये जगति ।

ॐ तत्सत् यच्च सच्चिदेव तच्चिन्मयं जगत् भासते चिदात्मनि सत्यप्रकाशः सत्यस्य भगवतः ।

यथा सूर्यस्य प्रतिबिम्ब एकः शान्ते जले बहवश्चले सत्यः सूर्यः सत्यः प्रतिबिम्बः सत्यप्रकाशः सतः सूर्यस्य न स स्वप्नः सतः प्रकाशस्तु सः, यथा वा सूर्यस्य ज्योतिः सौरं जगत् स्वशक्त्या धावदिव पूरयत् प्रकाशते सत्यं ज्योतिः सत्यप्रकाशः सतः सूर्यस्य न सोऽलीका भातिः सतः सत्यप्रकाशस्तु सः, यथा वा सूर्यस्य ज्वालामयं बिम्बं न स्वयं सूर्यः सूर्यस्य तु सूर्यत्वं प्रकाशयत्येतदन्नमयं रूपमन्नाश्रिते ज्ञाने तद्रूपातीतस्तु सूर्यः सत्यः सूर्यः सत्यं रूपं बिम्बाकृति सत्यप्रकाशः सतः सूर्यस्य न स मायान्वितः सतः सत्यप्रकाशस्तु सः, तथेह जगद्ब्रह्म सत्यप्रकाशो भगवतः न स्वप्नः न मायान्वितं नालीका भातिः सतः सत्यप्रकाशस्तु तद् न स्वयं

भगवान् तथापि स्वयमेव सः । एषा परा मायैषा योगमाहात्म्यं रहस्यमयस्य योगेश्वरस्य कृष्णस्यैषा चिच्छक्त्या आनन्दमयी लीला परस्यातर्क्या गतिः ।

सर्वमिदमर्थतः सत्यं परार्थतः असत्यमिति मनस्तुष्ट्यर्थं विज्ञानार्थमुच्यतां न हि किञ्चिदप्यसत्यं सत्ये ब्रह्मणि ।

एवं यत् प्रकाशते जगदानन्द एव तत् ।

ओं तत्सत् यच्च सच्चिदेव तद्यच्च चित् स आनन्दः । यत्तु निरानन्दमिति भासते दुः खमिति दुर्बलमित्यज्ञानमिति तदानन्दस्य विकार आनन्दस्य क्रीडा ।

यो हि जीवः स आनन्दमयः प्रच्छन्नो भगवान् स्वप्रकाशमयं जगद्ब्रह्म भोक्तुमवतीर्णः । य एष दुःखभोगः स भोग एवानन्दमयस्तस्यानन्दमेवानन्दमयो भुङ्क्ते ।

को हि निरानन्दं भोक्तुमुत्सहेत यः सर्वानन्दमयः स एवोत्सहते निरान्दमयस्तु निरानन्दं भुञ्जानः न भुञ्जीतानन्दं विना प्रणश्येत् । को दुर्बलो भवितुं शक्नुयाद्यः सर्वशक्तिमान् स एव शक्नुयाद् दुर्बलो ह्याक्रान्तो दुर्बलत्वेन न तिष्ठेच्छक्तिं विना प्रणश्येत् । कोऽज्ञानं प्रवेष्टुं समर्थो यः सर्वज्ञानमयः स एव समर्थोऽज्ञस्तु तस्मिंस्तिमिरे न ध्रियेतासत्त्वसदेव भवेद् ज्ञानं विना प्रणश्येत् । ज्ञानस्य क्रीडाज्ञानं स्वस्मिन्नात्मगोपनं शक्तेः क्रीडा दौर्बल्यं निरानन्दमानन्दस्य क्रीडात्मगोपनं स्वात्मनि ।

सानन्दं हसति जीवः सानन्दं क्रन्दत्यश्रूणि मुञ्चति तमोमय आनन्दे भासमान इव यातनाभिश्चेष्टमानः सानन्दं स्फुरति सानन्दं स्फुरति चेष्टमानः प्रचण्डाभी रतिभिः । पूर्णभोगार्थं तस्यानन्दस्य तामसस्यांशस्य तामसो भूत्वानन्दं गोपयति ।

अज्ञानं मूलमेतस्य भावस्य सान्त एवाहमित्यशक्तो दुर्बलो दुःखी मया कर्तव्यं ज्ञातव्यं लब्धव्यं प्रयासेन तपः क्षयेण मृत्युना स त्वमेषोऽहं यत्त्वं न तदहं यत्तव शुभं तन्ममाशुभं येन तव लाभस्तेन मम हानिः त्वामेव हन्यां सुखी भविष्यामि नैव सात्त्विकोऽहं त्वामेव सुखिनं करोमि स्वदुःखेन स्वहान्या स्वमृत्युनेत्याद्यज्ञानस्य स्वरूपं मनसि ।

अहङ्कार एव बीजमहङ्कारमोक्षादज्ञानमोक्षः
अज्ञानमोक्षाद् दुःखान्मुच्यते आनन्दमयोऽहं
सोऽहमेकोऽहमनन्तोऽहं सर्वोऽहमिति विज्ञायानन्दमयो
भवत्यानन्दो भवति ।

एष एव मोक्षः । स मुक्तः सर्वेषां भोगान् भुङ्क्ते
सर्वानानन्दाननन्तं भुञ्जानो न सान्तैर्वियुज्यते सान्तानि भुञ्जानो
नानन्तेन हीयते स एको भवति बहुर्भवति स ह्यजो जायत इव
जायमानोऽपि न जायते न बध्यते न जन्म तस्य विद्यते
आत्मन्यात्मात्मना प्रकाशयाम्यात्मानमिति ज्ञानाद् विमुक्तः क्रीडते ।

लीलार्थं हि जगदानन्दार्थं लीलामय इति लीलां
कुरुतानन्दस्य पुत्राः युक्ताः क्रीडतानन्दं भुङ्ध्वमेकं भोग्यं
भगवन्तं प्राप्य भुङ्ध्वं सर्ववस्तुषु ।

आनन्दं हि प्रवक्ष्यामि भगवतादिष्टः ।
तामसमपावृत्यानन्दः प्रकाशतां तस्य पुत्राः ।